# चम्पूरामायणे

# बालकाण्डम्

२७ – २५.०६.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- कुशः – तत्पुत्राः
- कुशनाभस्य पुत्रीणां कथा
- कुशनाभः – गाधिः – विश्वामित्रः
- गङ्गानदीमार्गेण प्रस्थिताः रामादयः
- आजानपावनक्षीराम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# रामायणतः कुशकथाप्रसङ्गः

- ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे । वासं चक्रुर्मुनिगणाः शोणाकूले समाहिताः ॥बाल०३१/१९॥
- अथ रामो महातेजा विश्वामित्रं तपोधनम् । पप्रच्छ मुनिशार्दूलं कौतूहलसमन्वितः ॥बाल० ३१/२२॥
- भगवन् को न्वयं देशः समृद्धवनशोभितः । श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः ॥बाल० ३१/२३॥
- चोदितो रामवाक्येन कथयामास सुव्रतः । तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥बाल० ३१/२४॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# रामायणतः कुशकथाप्रसङ्गः

- चक्रे पुरवरं राजा वसुर्नाम गिरिव्रजम् । एषा वसुमती नाम वसोस्तस्य महात्मनः । एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥बाल० ३२/८॥
- सुमागधी नदी रम्या मागधान् विश्रुताययौ । पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥बाल०३२/९॥
- कुशनाभस्य कथा

# रामायणतः कुशकथाप्रसङ्गः

- स पिता मम काकुत्स्थ गाधिः परमधार्मिकः । कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ॥बाल० ३४/६॥
- पूर्वजा भगिनी चापि मम राघव सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥बाल० ३४/७॥
- सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी । कौशिकी परमोदारा सा प्रवृत्ता महानदी॥बाल० ३४/८॥
- ततोऽहं हिमवत्पार्श्वे वसामि नियतः सुखम् । भगिन्यां स्नेहसंयुक्तः कौशिक्या रघुनन्दन ॥बाल० ३४/१०॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# रामायणतः कुशकथाप्रसङ्गः

- अहं हि नियमात् राम हित्वा तां समुपागतः । सिद्धाश्रममनुप्राप्तः सिद्धोऽस्मि तव तेजसा ॥बाल० ३४/१२॥
- एषा राम ममोत्पत्तिर्मम वंशस्य कीर्तिता । देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥बाल०३४/१३॥
  - देशस्य = शोणाकूलीयदेशस्य गिरिव्रजस्य प्राचीनकर्त्रधिष्ठानमूलो वैभवश्च कीर्तितः

# अथ भागीरथीकथां श्रोतुकामाय रामाय भगवानिदमभाषत ।

- अथ, भागीरथी-कथाम्, श्रोतुकामाय, रामाय, भगवान्, इदम्, अभाषत
- तात्पर्य्यम् – गङ्गानदीं प्राप्य तस्याः कथां श्रोतुम् इष्टवते रामाय पूज्यः विश्वामित्रः एवं कथयामास ।
- श्रोतुकामाय – श्रोतुं कामः यस्य सः, तस्मै । "तुं काममनसोरपि" इति वार्त्तिकेन तुमुनः मकारलोपः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# पुरा मनोरमा नाम सुमेरोरभवत्सुता ।
# गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम् ॥५५॥

- पुरा, मनोरमा, नाम, सुमेरोः, अभवत्, सुता, गृह-मेधी, तया, एव, आसीत्, चक्रवर्त्ती, धरा-भृताम्
- पुरा = पूर्वकाले
- अभवत् = आसीत्
- का आसीत्? सुता = पुत्री

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# पुरा मनोरमा नाम सुमेरोरभवत्सुता ।
# गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम् ॥५५॥

- कस्य सुता? सुमेरोः = मेरुपर्वतस्य
- किंनामा सुता? मनोरमा नाम
- आसीत् = अभूत्
- कः आसीत्? धराभृताम् = पर्वतानाम्, चक्रवर्ती = सार्वभौमः । हिमालयः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# पुरा मनोरमा नाम सुमेरोरभवत्सुता ।
# गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम् ॥५५॥

- कीदृशः आसीत्? गृहमेधी = गृहस्थः
- कया गृहमेधी आसीत्? तया = मनोरमया एव ।
- अन्वयः – पुरा मनोरमा नाम सुमेरोः सुता अभवत् । धराभृतां चक्रवर्ती तया एव गृहमेधी आसीत् ।
- तात्पर्य्यम् – पूर्वकाले मेरुपर्वतस्य मनोरमाख्या पुत्री बभूव, यां हिमालयः परिणीतवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam -Value Education

# पुरा मनोरमा नाम सुमेरोरभवत्सुता ।
# गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम् ॥५५॥

- गृहमेधी – गृहैः = दारैः मेधते = सङ्गच्छते । नकारान्तः, पुं, १.१
- आसीत् + चक्रवर्ती – श्चुत्वसन्धिः
- चक्रवर्ती – नकारान्तः, पुं, १.१ । "चक्रवर्त्ती सार्वभौमः" (अमरः)
- धराभृताम् – धरां बिभर्ति इति धराभृत् । तकारान्तः, पुं, ६.३ ।
- अनुष्टुप् छन्दः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam -Value Education - Technology

कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः ।
अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी ॥५६॥

- कन्या-द्वयम्, अमुष्य, आसीत्, एका, मन्दाकिनी, तयोः, अन्या, भगवती, साक्षात्, चन्द्र-चूड-कुटुम्बिनी ।
- आसीत् = बभूव
- किम् आसीत्? कन्याद्वयम् = पुत्रीद्वयम्
- कस्य कन्याद्वयम् आसीत्? अमुष्य = तस्य हिमवतः

कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः ।
अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी ॥५६॥

- तयोः = पुत्र्योः
- एका = अन्यतरा, आद्या
- मन्दाकिनी = तन्नाम्ना प्रसिद्धा
- अन्या = द्वितीया
- साक्षात् भगवती = प्रत्यक्षपरमेश्वरी
- चन्द्रचूडकुटुम्बिनी = चन्द्रशेखरस्य शिवस्य भार्या

कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः ।
अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी ॥५६॥

- अन्वयः – अमुष्य कन्याद्वयम् आसीत् । तयोः एका मन्दाकिनी, अन्या साक्षात् भगवती चन्द्रचूडकुटुम्बिनी ।
- तात्पर्य्यम् – मनोरमाजानेः हिमवतः पुत्रीद्वयं बभूव – तयोः ज्यायसी गङ्गा, कनीयसी प्रत्यक्षपरमेश्वरी, चन्द्रशेखरस्य शिवस्य भार्या ।

कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः ।
अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी ॥५६॥

- अमुष्य – सकारान्तः, पुं, 'अदस्', ६.१
- चन्द्रचूडकुटुम्बिनी – चन्द्रः चूडा यस्य सः, चन्द्रचूडस्य कुटुम्बिनी । "भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी । पुरन्ध्री" पति-पुत्र-दुहित्रादिमती कुटुम्बिनी ।

तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन् ।
तपस्यन्तीं गिरिगौरीं देवाय महते ददौ ॥५७॥

- अनीनयन् = प्रापितवन्तः
- के अनीनयन्? विबुधाः = देवाः
- किंकृत्वा अनीनयन्? लब्ध्वा = याच्ञापूर्वकं हिमवतः अनुमतिं प्राप्य
- कुत्र अनीनयन्? नाकलोकम् = स्वर्गम्
- काम् अनीनयन्? तां नदीम् = मन्दाकिनीम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन् ।
# तपस्यन्तीं गिरिगौरीं देवाय महते ददौ ॥५७॥

- ददौ = दत्तवान्
- कः ददौ? गिरिः = हिमवान्
- कां ददौ? गौरीम् = गौरीनाम्नीं द्वितीयां पुत्रीम्
- कीदृशीं गौरीम्? तपस्यन्तीम् = ईश्वरं प्राप्तुं तपः चरन्तीम्
- कस्मै ददौ? महते देवाय = महादेवाय शम्भवे

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन् ।
# तपस्यन्तीं गिरिगौरीं देवाय महते ददौ ॥५७॥

- अथ ज्येष्ठां सुराः सर्वे देवकार्यचिकीर्षया । शैलेन्द्रं वरयामासुः गङ्गां त्रिपथगां नदीम् ॥बाल० ३५/१७॥
- ददौ धर्मेण हिमवान् तनयां लोकपावनीम् । स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥बाल० ३५/१८॥
- या चान्या शैलदुहिता कन्यासीत् रघुनन्दन । उग्रं सुव्रतमास्थाय तपस्तेपे तपोधना ॥३५/२०॥
- उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् । रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन् ।
# तपस्यन्तीं गिरिगौरीं देवाय महते ददौ ॥५७॥

- विबुधाः – "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" (अमरः)
- नाकलोकम् – "स्वरव्ययं स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः" (अमरः)
- अनीनयन् – "णीञ् प्रापणे" + णिच् + लुङ्, प्रथम.३
- तपस्यन्तीम् – तपस् + क्यङ् + शतृ + ङीप् – ईकारान्तः, स्त्री, २.१
- महते – तकारान्तः, पुं, ४.१

# शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
# पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥५८॥

- शिवयोः, युञ्जतोः, वीर्यम्, दृष्ट्वा, धात्र्याम्, समर्पितम्, पावकः, प्रतिजग्राह, दैवतैः, अनुनाथितः
- प्रतिजग्राह = स्वीकृतवान्
- कः प्रतिजग्राह? पावकः = अग्निः
- कीदृशः पावकः? अनुनाथितः = प्रार्थितः
- कैः अनुनाथितः? दैवतैः = अमरैः

vyoma ॥वाचं ...॥ Samskritam - Value Education ...

# शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
# पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥५८॥

- किंकृत्वा प्रतिजग्राह? दृष्ट्वा = वीक्ष्य
- किं दृष्ट्वा? धात्र्यां समर्पितम् = भूमौ पतितम्
- किं धात्र्यां समर्पितम्? युञ्जतोः = मिलतोः, शिवयोः = पार्वतीपरमेश्वरयोः, वीर्यम् = रेतः

शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥५८॥

- अन्वयः – युञ्जतोः शिवयोः वीर्यं धात्र्यां समर्पितं दृष्ट्वा दैवतैः अनुनाथितः पावकः प्रतिजग्राह ।
- तात्पर्य्यम् – मिलतोः पार्वतीपरमेश्वरयोः रेतः भूमौ पतितं वीक्ष्य अमरैः प्रार्थितः अग्निः तत् स्वीकृतवान् ।

vyoma
॥वाचं ते शुन्धामि॥
Samskritam - Value Education

# शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
# पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥५८॥

- शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम् । तस्य संक्रीडमानस्य महादेवस्य धीमतः॥
- ततो देवाः समुद्युक्ताः पितामहपुरोगमाः । यदिहोत्पद्यते भूतं कस्तत् प्रतिसहिष्यते ॥
- अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन् । न लोका धारयिष्यन्ति तव तेजः सुरोत्तम ॥
- एवमुक्तः सुरपतिः प्रमुमोच महीतले । तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥
- ततो देवाः पुनरिदम् ऊचुश्चाथ हुताशनम् । प्रविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥
- तदग्निना पुनर्व्याप्तं संजातः श्वेतपर्वतः । दिव्यं शरवणं चैव पावकादित्यसन्निभम् ॥
- यत्र जातो महातेजाः कार्तिकेयो ऽग्निसंभवः ।

शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥५८॥

- शिवयोः – शिवश्च शिवा च – एकशेषः ।
- युञ्जतोः – “युजिर् योगे” + शतृ । तकारान्तः, पुं, ६.२
- धात्र्याम् – “विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा” (अमरः)
- पावकः – पुनाति – पू + ण्वुल् । “कृशानुः पावकोऽनलः” (अमरः)
- प्रतिजग्राह – प्रति + “ग्रह उपादाने” – लिट्, प्र.१

शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा धात्र्यां समर्पितम् ।
पावकः प्रतिजग्राह दैवतैरनुनाथितः ॥५८॥

- दैवतैः – “वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्” (अमरः)
- अनुनाथितः – अनु + “नाथृ याञ्चा-उपताप-ऐश्वर्य-आशीष्षु” + क्त

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# सङ्क्षेपः

- भागीरथीकथा
  - मनोरमा-हिमवन्तौ, तयोः कन्याद्वयम्
  - गङ्गा लोकहितार्थं दैवतैर्नीता स्वर्णदी जाता
  - उमा शङ्करेणोढा
  - शिवयोः वीर्यं भूमौ पतितम् अग्निना स्वीकृतम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in